संस्कृतवाङ्मयं द्विधा विभक्तम् अस्ति- गद्यं पद्यं च। गद्यं वाक्यसमूहात्मकं भवति, पद्यं छन्दोबद्धं भवति। तेषु सन्धियुक्तानां समस्तानां च पदानां प्रयोग आधिक्येन भवति। अतः कः सन्धिः, कश्च समास इत्यवगच्छामः।

## सन्धिः = वर्णसम्बन्धि कार्यम्।

यदा वर्णयोः परस्परम् अत्यन्तं सन्निधिः इष्यते, तदा सन्धिः क्रियते।

अत्यन्तं सन्निधेः अपरं नाम 'संहिता' इत्यस्ति पाणिनीयव्याकरणे-

**परः सन्निकर्षः संहिता ( पाणिनीयसूत्रम् )**

**संहितैकपदे नित्या नित्या धातूपसर्गयोः।**
**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।।**

**एकपदे**- लक्ष्म्यौ - लक्ष्मी औ = लक्ष्म्यौ

**धातूपसर्गयोः** - प्र+ अहरत् = प्राहरत्

**समासे**- बुद्ध्यादयः = बुद्धिः आदिः येषां ते

**वाक्ये**- मम नाम नन्दिनी अस्ति/ नन्दिन्यस्ति।

**यदा सन्धिः भवति, तदा कार्यत्रयं भवितुम् अर्हति-**

❖ **क्वचिद् आदेशाः भवन्ति।**

**क. साक्षाद् आदेशः, ( इति+आदि = इत्यादि**

**ख. पूर्वसवर्णः अथवा परसवर्णः**

**यथा**– तत् + लयः = तल्लयः

विद्वान् + लिखति = विद्वाँल्लिखति

वाग् + हरिः = वाग्घरिः

**ग. पूर्वरूपम्, अथवा पररूपम्**

भानो + अत्र – भानोऽत्र

शक + अन्धुः – शकन्धुः

मनस् + ईषा – मनीषा

❖**क्वचिद् आगमाः भवन्ति।**

सन् + अन्तः – सन् न् अन्तः = सन्नन्तः

❖**क्वचिद् लोपः भवति।**

**यथा**– ये एते – यय् एते – य एते

**आगम–आदेशयोः मध्ये भेदः –**

– आगमाः मित्रवद् भवन्ति।

– आदेशाः शत्रुवद् भवन्ति।

मुख्यतः सन्धीनां पञ्च भेदाः सन्ति–

**क. स्वरसन्धिः ( अच्सन्धिः )**

स्वरवर्णयोः मध्ये यः सन्धिः भवति, तस्य नाम **स्वरसन्धिः।** अस्य बहवो भेदाः सन्ति परन्तु आधिक्येन यण्सन्धि-गुणसन्धि-वृद्धिसन्धि-पूर्वरूपसन्धि-दीर्घसन्धीनां प्रयोगाः दृश्यन्ते-

**यण्-सन्धिः** - स्वरवर्णे परे इ, उ, ऋ, लृ- इत्येतेषां स्थाने क्रमशः य्, व्, र्, ल् आदेशाः भवन्ति।

इ + अ = य्

उ + इ = व्

ऋ + इ = र्

लृ + इ = ल्

भवति + उत्पलकोमलम् = भवत्युत्पलकोमलम्।

यदि + अपि = यद् य् अपि - यद्यपि

मधु + इदम् = मध् व् इदम्- मध्विदम्

कर्तृ + एतत् = कर्त् र् एतत्- कर्त्रेतत्

गम्लृ + इति = गम् ल् इति - गम्लिति

**गुणसन्धिः** - इ, उ, ऋ, लृ - एतेषु वर्णेषु परेषु पूर्वं यदि 'अ' अथवा 'आ' अस्ति चेद् इत्थम् आदेशाः भवन्ति- **गुणः = अ, ए, ओ**

(अ+इ = ए,      आ+इ = ए) -  मम + इदम् = ममेदम्

पुस्तिका + इयम् - आ+इ- पुस्तिक् ए यम् - पुस्तिकेयम्

(अ+उ = ओ,    आ+उ = ओ)

शीत + उष्णम् - अ + उ - शीतोष्णम्

गङ्गा + उदकम् - गङ्गोदकम्

(अ+ऋ = अर्,  आ+ऋ = अर्)

तव + ऋद्धिः - अ + ऋ - तवर्द्धिः

महा + ऋषिः - आ + ऋ - महर्षिः

(अ+ऌ = अल्,  आ+ऌ = अल्)

तव + ऌकारः - अ + ऌ - तवल्कारः

**वृद्धिसन्धिः** -  ए, ओ, ऐ, औ - एतेषु वर्णेषु परेषु पूर्वं यदि 'अ' अथवा 'आ' अस्ति चेद् इत्थम् आदेशाः भवन्ति- **वृद्धिः - आ, ऐ, औ**

(अ+ए = ऐ,    आ+ए = ऐ) -

तव + एतत् -    अ + ए - तवैतत्

वार्ता + एषा - आ + ए - वार्तैषा

(अ+ऐ = ऐ,    आ+ऐ = ऐ) -

सर्व + ऐक्यम्    - अ + ऐ - सर्वैक्यम्

एषा+ ऐदम्प्राथम्येन - आ + ऐ - एषैदम्प्राथम्येन

(अ+ओ = औ,  आ+ओ = औ) -

प्रणव + ओङ्कारः - अ + ओ - प्रणवौङ्कारः

गङ्गा + ओघः - गङ्गौघः

(अ+औ = औ,  आ+ औ = औ)

सर्व + और्ध्वदैहिकम् - सर्वौर्ध्वदैहिकम्

**पूर्वरूपसन्धिः** - 'अ' इति परतः सति पूर्वं यदि पदस्यान्तिमः 'ए' अथवा 'ओ' भवति चेत् इत्थम् आदेशाः भवन्ति-

ए + अ = एऽ

ओ + अ = ओऽ

**यथा-** **छेदे** + **अपि** - **ए**+ **अ** = **एऽ**- **छेदेऽपि**

**जले** + **अस्मिन्** - **ए** + **अ** - **एऽ** - **जलेऽस्मिन्**

**धन्यो** + **अस्मि** - **धन्योऽस्मि**

**दीर्घसन्धिः** -

(अवर्णः + अवर्णः = आ) - मम + अपि = ममापि, रामायणम्

विद्या + आलयः = विद्यालयः

(इवर्णः + इवर्णः = ई ) - कवि + इन्द्रः - कवीन्द्रः, इतीदम्

नन्दी + ईश्वरः - नन्दीश्वरः

(उवर्णः + उवर्णः = ऊ) - गुरु + उपदेशः = गुरूपदेशः, भानूदयः

वधू + ऊर्मिका = वधूर्मिका

(ऋवर्णः + ऋवर्णः = ॠ) पितृ + ऋणम् = पितॄणम्

(लृवर्णः + लृवर्णः = ॠ) - गम्लृ + लृकारः = गम्ॠकारः

**अयादिसन्धिः** -

ए + स्वरवर्णः) - अय्- आदेशः - ने + अति - न् अय् अति - नयति

ओ + स्वरवर्णः - अव् - पो + अनः - प् अव् अनः - पवनः

ऐ + स्वरवर्णः - आय् - नै + अकः - न् आय् अकः - नायकः

गै + अक+ः - ग् आय् अकः - गायकः

औ + स्वरवर्णः - आव् - पौ + अकः - प् आव् अकः - पावकः

द्वौ + एतौ - द्व् आव् एतौ - द्वावेतौ

**ग. व्यञ्जनसन्धिः** - प्रायः व्यञ्जनवर्णयोः मध्ये जायमानः सन्धिः। अस्यापि सन्ति बहवो भेदाः, परन्तु अधिकतया **श्चुत्व-ष्टुत्व-जश्त्व-अनुनासिक-अनुस्वारसन्धीनां** प्रयोगो भवति।

**श्चुत्वसन्धिः** -

**स्** + श्, च्, छ्, ज्, झ्, ञ् = **श्**

श्, च्, छ्, ज्, झ्, ञ् + **स्** = **श्**

च्, छ्, ज्, झ्, ञ् + **त्, थ्, द्, ध्, न्** = **च्, छ्, ज्, झ्, ञ्**

**त्, थ्, द्, ध्, न्** + च्, छ्, ज्, झ्, ञ् = **च्, छ्, ज्, झ्, ञ्**

**सत्** + **चिदानन्दस्वरूपाय**

**त्** + **च्**

**च्** - **सच्चिदानन्दस्वरूपाय**

एतान् + जयति - एताञ्जयति

**मनस्** + **चञ्चलम्** = **मनश्चञ्चलम्**

**ष्टुत्वसन्धिः** -

**स्** + ष्, ट्, ठ्, ड्, ढ्, ण् = **ष्**

ष्, ट्, ठ्, ड्, ढ्, ण् + **स्** = **ष्**

च्, छ्, ज्, झ्, ञ् + **त्, थ्, द्, ध्, न्** = **च्, छ्, ज्, झ्, ञ्**

**त्, थ्, द्, ध्, न्** + ष्, ट्, ठ्, ड्, ढ्, ण् = **ष्, ट्, ठ्, ड्, ढ्, ण्**

एतत् + टीका - एतट्टीका, बृहट्टीका

**जश्त्वसन्धिः** - पदस्य अन्ते विद्यमानानां वर्गस्य प्रथम-द्वितीय-चतुर्थवर्णानां स्थाने तृतीयाक्षराणि आदेशरूपेण भवन्ति।

**यथा- लोकापवादात्** + **भयम्** = **लोकापवादाद् भयम्**

समिध् - नयति - समिद् नयति

समिध् आदानम् - समिदादानम्

झश् - झ भ घ ढ ध ज ब ग ड द

तत् ददातु = तद् ददातु

**अच्** + **अन्तः- अजन्तः**

**अनुनासिकसन्धिः** - वर्गस्य पञ्चमाक्षराणि परतः सन्ति चेत् पदस्य अन्त्ये स्थितानां पूर्वाक्षराणां तस्य तस्य वर्गस्य अन्तिमाक्षराणि आदेशरूपेण भवन्ति। यथा-

**ग्** + ङ्, ञ्, ण्, न्, म् = ङ्

**ज्** + ङ्, ञ्, ण्, न्, म् = ञ्

**ड्** + ङ्, ञ्, ण्, न्, म् = ण्

**द्** + ङ्, ञ्, ण्, न्, म् = न्

**ब्** + ङ्, ञ्, ण्, न्, म् = म्

**यथा- दौर्मन्त्र्याद्** + **नृपतिः** = **दौर्मन्त्र्यान्नृपतिः**

एतद् मम– एतन्मम, एतत् + मध्ये – एतन्मध्ये

षड् + मुखः = षण्मुखः

वाक् + मयम् = वाग् + मयम् – वाङ्मयम्

षड् + नवतिः – षड् + णवतिः, षण्णवतिः

**अनुस्वारसन्धिः** –

व्यञ्जन–वर्णे परे सति 'म्' इत्यस्य अनुस्वारादेशः

रामम् वन्दे – रामं वन्दे, संस्कृतम् (सम् + स्कृतम्, सँस्कृतम्

वन्दे रामम् – वन्दे रामम्

रामम् अर्चयामि – रामम् अर्चयामि।

**घ. विसर्गसन्धिः** –

**वर्गस्य खरि( प्रथमद्वितीयाक्षरेषु तथा च श्, ष्, स्- इत्येतेषु) परे अवसाने च सति रेफस्य विसर्गः भवति।** एतस्यां स्थितौ निम्नलिखिता नियमाः–

रामः कार्यं करोति

हरिर्गायति, हरेर्नामैव

- **विसर्गस्य सादेशः** – खर्–प्रत्याहारे परे विसर्गस्य स्थाने स्–आदेशः

भवति- विष्णुः त्राता - विष्णुस्त्राता।

रामः तिष्ठति - रामस्तिष्ठति

- **विसर्गस्य क्, ख्, प्, फ, श्, ष्, स् - इत्यतेषु परेषु वैकल्पिकः विसर्गादेशः -**

  रामः शेते, रामश्शेते

  हरिः सिञ्चति, हरिस्सिञ्चति

  बालकः ष्ठीवति, बालकष्ष्ठीवति

  कः करोति,

  जनः पिबति

**यदा रेफस्य विसर्गः न भवति, तदा निम्नलिखिता नियमाः -**

- **'अर् + अ' इति स्थितौ रेफस्य उ-आदेशः -**
  सर् + अहम्, स उ अहम्, सो अहम्, सोऽहम्
  देवर् अर्च्यः, देवउ अर्च्यः, देवो अर्च्यः, देवोऽर्च्यः
- **'अर् + हश् ( वर्गस्य तृतीय-चतुर्थपञ्चमाक्षराणि, ह्,य्,व्,र्,ल्' इति स्थितौ रेफस्य उ-आदेशः**
  रामर् गच्छति, रामउ गच्छति, रामो गच्छति

- **'अ/आ-र् + अश्' इति स्थितौ य् आदेशः, तस्य लोपः ( अदर्शनम् ) च।**

**रामर् आगतः, रामय् आगतः, राम आगतः**

- **रेफे परे रेफस्य लोपः, ततः दीर्घः** - पुना रमते, हरी रम्यः।

  अन्तर् + राष्ट्रियम्

  अन्त राष्ट्रियम्

  अन्താराष्ट्रियम्

**क्ष्** = **क्** + **ष्**

वासः क्षौमं

# समासः

द्वयोः पदयोः, बहूनां पदानां वा एकपदीभवनम् = समासः।

मुख्यतः चतुर्विधाः समासाः (अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्वश्च) तथा च तेषाम् उपभेदाः (तत्पुरुषस्योपभेदौ द्विगुः, कर्मधारयश्च, द्वन्द्वस्य समाहारद्वन्द्वः इतरेतरद्वन्द्वश्च) वर्णिताः सन्ति।

**अव्ययीभावः** - **प्रायः पूर्वपदार्थप्रधानः।** यथा- **गङ्गायाः समीपम् उपगङ्गम्।**

क्वचिद् न भवत्यपि- **उन्मत्तगङ्गम्।**

**तत्पुरुषः** - **प्राय उत्तरपदार्थप्रधानः।** यथा- **राज्ञः पुरुषः**

क्वचिद् न भवत्यपि- **अतिक्रान्तो रात्रिम् 'अतिरात्रः'।**

तत्पुरुषस्य एव अवान्तरभेदः **कर्मधारयः** इति भवति। तत्र विशेष्यविशेषणयोः मध्ये, उपमान-सामान्यधर्मयोः मध्ये च समासः भवति। **तद्यथा**-

नीलं च तत् कमलम् = नीलकमलम्

घनः इव श्यामः = घनश्यामः

**बहुव्रीहिः** - **प्रायोऽन्यपदार्थप्रधानो बहुव्रीहिः।** यथा- पीतानि अम्बराणि यस्य सः पीताम्बरः।

क्वचिद् न भवत्यपि- **द्वौ वा त्रयो वा 'द्वित्राः'।**

**द्वन्द्वः** - **प्राय उभयपदार्थप्रधानः।** यथा- **रामश्च कृष्णश्च रामकृष्णौ।**

क्वचिद् न भवत्यपि- **पाणी च पादौ च तयोः समाहारः 'पाणिपादम्'।**

**१. प्रारभ्यते न खलु विघ्नभयेन नीचैः**

**प्रारभ्य विघ्नविहता विरमन्ति मध्याः।**

**विघ्नैः पुनः पुनरपि प्रतिहन्यमाने**

**प्रारब्धमुत्तमजना न परित्यजन्ति॥ नीतिशतकम्, श्लो. २७ ॥**

**अन्वयः** - नीचैः (जनैः) खलु विघ्नभयेन (कार्यम्) न प्रारभ्यते (एव), (ये) मध्याः (ते) (कार्यम्) प्रारभ्य (अपि) विघ्नविहताः (सन्तः) विरमन्ति। (परन्तु ये) उत्तमजनाः (सन्ति) ते पुनःपुनः विघ्नैः प्रतिहन्यमाने (अपि) प्रारब्धम् (कार्यम्) न परित्यजन्ति।

- **समासस्थलानि** -

विघ्नभयेन = विघ्नेभ्यः भयम्, तेन - पञ्चमीतत्पुरुषसमासः।

विघ्नविहताः = विघ्नैः विहताः (पीडिताः) - तृतीयातत्पुरुषसमासः।

उत्तमजनाः = उत्तमाश्च ते जनाः - कर्मधारयसमासः।

कृष्णा लेखनी - कृष्णलेखनी

**कृष्णः च असौ सर्पः - कृष्णसर्पः**

**नीलश्च असौ मेघः - नीलमेघः**

**मेघश्यामः = मेघ इव श्यामः**

- **सन्धिस्थलानि** -

नीचैः, मध्याः, विघ्नैः, पुनः – एतेषु विसर्गो भवति।

पुनर् + अपि – अत्र विसर्गो न भवति।

उत्तमजनाः + न = उत्तमजना न – अत्र विसर्गस्य लोपः।

विघ्नविहताः + विरमन्ति = विघ्नविहता विरमन्ति – अत्र विसर्गस्य लोपः।

**२. जाड्यं धियो हरति सिञ्चति वाचि सत्यं**

**मानोन्नतिं दिशति पापमपाकरोति।**

**चेतः प्रसादयति दिक्षु तनोति कीर्तिं**

**सत्सङ्गतिः कथय किं न करोति पुंसाम्।। नीतिशतकम्, श्लो. २३**

**अन्वयः** – धियः जाड्यम् = मन्दतां हरति, वाचि सत्यं सिञ्चति = पल्लवयति, मानोन्नतिम् = सम्मानस्य वृद्धिम्, दिशति = सम्पादयति, पापम् अपाकरोति = दूरीकरोति, चेतः = चित्तम्, प्रसादयति, दिक्षु कीर्तिं तनोति = विस्तारयति, (हे मनुष्य!) कथय, सत्सङ्गतिः पुंसां किं (कार्यम्) न करोति।

➢ **समासस्थलानि** –

मानोन्नतिम् = मानस्य उन्नतिः, ताम् – षष्ठीतत्पुरुषसमासः

सत्सङ्गतिः = सतां सङ्गतिः – षष्ठीतत्पुरुषसमासः

➢ **सन्धिस्थलानि** –

धियः + हरति = धियो हरति – अत्र रेफस्य विसर्गो न, अपितु 'उ' इत्यादेशः।

सत्यं, मानोन्नतिं, कीर्तिं – एतेषु 'म्' इत्यस्य अनुस्वारादेशः भवति।

पुंसाम् – अत्र अनुस्वारादेशो न भवति।

**३. वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता**
**विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद् भयम्।**
**भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले**
**एते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः॥**

**समासस्थलानि –**

**सज्जनानां सङ्गमः = सज्जनसङ्गमः, तस्मिन् – षष्ठीतत्पुरुषसमासः**

**परस्य गुणः = परगुणः, तस्मिन् – षष्ठीतत्पुरुषसमासः**

**स्वस्याः योषित् = स्वयोषित्, तस्याम् – षष्ठीतत्पुरुषसमासः**

**लोकस्य अपवादः = लोकापवादः, तस्मात् – षष्ठीतत्पुरुषसमासः**

**आत्मनः दमनम् = आत्मनदमनम्, तस्मिन् – षष्ठीतत्पुरुषसमासः**

**संसर्गात् मुक्तिः = संसर्गमुक्तिः – पञ्चमीतत्पुरुषसमासः**

**निर्मलाश्च ते गुणाः = निर्मणगुणाः – कर्मधारयसमासः**

**४. दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।**

**यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥**

**नीतिशतकम्, श्लो. ४३**

**अन्वयः** - वित्तस्य तिस्रः गतयः भवन्ति- दानम्, भोगः, नाशः (च)। यः न ददाति, न (च) भुङ्क्ते, तस्य तृतीया गतिः भवति।

➢ **सन्धिस्थलानि**-

भोगो, तिस्रो, गतयो, यो - एतेषु सर्वत्र रेफस्य स्थाने 'उ'-आदेशो भवति।

नाशः + तिस्रः = नाशस्तिस्रः - विसर्गस्य स्थाने 'स्' इत्यादेशः।

**५. सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम्।**

**आपत्सु च महाशैलशिलासङ्घातकर्कशम्॥ नीतिशतकम्, श्लो. ६६**

**अन्वयः** - महतां चित्तं सम्पत्सु (सुखेषु सत्सु) उत्पलकोमलं भवति, आपत्सु च महाशैलशिलासङ्घातकर्कशं भवति।

➢ **समासस्थलानि** -

**उत्पलकोमलम्** = उत्पलम् इव कोमलम्- तत्पुरुषसमासः (उपमानानि सामान्यवचनैः)

**महाशैलशिलासङ्घातकर्कशम्**-

महान्तश्च ते शैलाः - महाशैलाः, (कर्मधारयसमासः),

शिलानां सङ्घातः - शिलासङ्घातः (षष्ठीतत्पुरुषसमासः)

महाशैलानां शिलासङ्घातः - महाशैलशिलासङ्घातः (षष्ठीतत्पुरुषसमासः)

महाशैलशिलासङ्घात इव कर्कशम् - महाशैलशिलासङ्घातकर्कशम् -

तत्पुरुषसमासः।

**६. आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।**

**नास्त्युद्यमसमो बन्धुः कुर्वाणो नावसीदति॥**

**अन्वयः** - आलस्यं हि मनुष्याणां शरीरस्थः महान् रिपुः वर्तते (तथा च) उद्यमसमः बन्धुः (मनुष्याणाम्) अन्यः कोऽपि नास्ति, (यतः, उद्यमम्) कुर्वाणः (जनः) न अवसीदति = कष्टं न प्राप्नोति।

➢ **समासस्थलानि** -

उद्यमेन समः = उद्यमसमः - तृतीयातत्पुरुषः।

शरीरे तिष्ठति इति - शरीरस्थः - उपपदसमासः।

➢ **सन्धिस्थलानि**-

आलस्यं, मनुष्याणां - एतयोः 'म्' इत्यस्य अनुस्वारादेशः।

शरीरस्थो, उद्यमसमो, कुर्वाणो - अत्र रेफस्य 'उ' इत्यादेशः।

नास्ति + उद्यमसमः = नास्त्युद्यमसमः

**७. सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि।**

**छेदेऽपि चन्दनतरुः सुरभयति मुखरं कुठारस्य॥**

**हरिभट्टः, वल्लभदेवसुभाषितावलिः।**

**अन्वयः** - विनाशकाले अपि परहितनिरतः सुजनः (तथैव) वैरं न याति (यथा) चन्दनतरुः छेदे अपि कुठारस्य मुखरं सुरभयति।

➢ **समासस्थलानि** -

परेषां हितानि = परहितानि, परहितेषु निरतः = परहितनिरतः

विनाशस्य कालः = विनाशकालः, तस्मिन्

चन्दनं च असौ तरुः = चन्दनतरुः

➢ **सन्धिस्थलानि** -

विनाशकाले + अपि = विनाशकालेऽपि - पूर्वरूपसन्धिः

छेदे + अपि = छेदेऽपि - पूर्वरूपसन्धिः

**८. गुणैरुत्तमतां याति नोच्चैरासनसंस्थितः।**

**प्रासादशिखरस्थोऽपि काकः किं गरुडायते॥ चाणक्यनीतिः,**

**अन्वयः** - (मनुष्यः) उच्चैरासनसंस्थितः सन् उत्तमतां न याति, अपितु गुणैः (एव याति), प्रासादशिखरस्थः अपि काकः गरुडायते किम्?

➢ **समासस्थलानि**-

उच्चैश्च तद् आसनम् = उच्चैरासनम् - कर्मधारयसमासः।

उच्चैरासने संस्थितः = उच्चैरासनसंस्थितः - सप्तमीतत्पुरुषसमासः।

प्रासादस्य शिखरम् = प्रासादशिखरम् - षष्ठीतत्पुरुषसमासः।

प्रासादशिखरे तिष्ठति इति = प्रासादशिखरस्थः - उपपदसमासः।

➢ **सन्धिस्थलानि** -

गुणैर् + उत्तमताम्, उच्चैर् + आसनसंस्थितः - एतयोः रेफस्य न विसर्गः।

न + उच्चैः = नोच्चैः - गुणसन्धिः।

प्रासादशिखरस्थः + अपि = प्रासादशिखरस्थोऽपि - अत्र रेफस्य 'उ' इत्यादेशः,

ततः गुणः, ततश्च पूर्वरूपसन्धिः।

**९. दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनाद्**

**विप्रोऽनध्ययनात् कुलं कुतनयाच्छीलं खलोपासनात्।**

**ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयाद्**

**मैत्री चाप्रणयात् समृद्धिरनयात्त्यागप्रमादाद्धनम्॥**

**नीतिशतकम्, ४२**

**अन्वयः** - नृपतिः दौर्मन्त्र्यात्, यतिः सङ्गात्, सुतः लालनात्, विप्रः अनध्ययनात्, कुलं कुतनयात्, शीलं खलोपासनात्, ह्रीः मद्यात्, कृषिः अपि अनवेक्षणात्, स्नेहः प्रवासाश्रयात्, मैत्री अप्रणयात्, समृद्धिः अनयात्, धनं च त्यागप्रमादाद् विनश्यति।

- **समासस्थलानि** -

नृणां पतिः = नृपतिः - षष्ठीतत्पुरुषसमासः।

अनध्ययनात् = न अध्ययनम् अनध्ययनम्, तस्मात् - नञ्समासः।

खलोपासनात् = खलस्य उपासनम्, तस्मात् - षष्ठीतत्पुरुषसमासः।

अनवेक्षणात् = न अवेक्षणम्, तस्मात् - नञ्समासः।

प्रवासाश्रयात् = प्रवासस्य आश्रयः, तस्मात् (परदेशवासात्)- षष्ठीतत्पुरुषसमासः।

अनयात् = न नयः - अनयः, तस्मात् - नञ्समासः।

त्यागप्रमादात् = त्यागे प्रमादः, तस्मात् - सप्तमीतत्पुरुषसमासः।

**सन्धिस्थलानि**-

दौर्मन्त्र्याद् + नृपतिः = दौर्मन्त्र्यान्नृपतिः - अत्र 'द' इत्यस्य अनुनासिकादेशः।

यतिः, कृषिः, स्नेहः - एतेषु रेफस्य विसर्गः।

सुतर् + लालनाद् = सुतो लालनाद् - अत्र रेफस्य 'उ' इत्यादेशः

विप्रर् + अनध्ययनात् = विप्रोऽनध्ययनात्- अत्र रेफस्य 'उ' इत्यादेशः,

ततः गुणः, ततश्च पूर्वरूपसन्धिः।

**१०. मुकुन्द मूर्ध्ना प्रणिपत्य याचे**
**भवन्तमेकान्तमियन्तमर्थम्।**
**अविस्मृतिस्त्वच्चरणारविन्दे**
**भवे भवे मेऽस्तु भवत्प्रसादात्॥ मुकुन्दमालास्तोत्रम्, ४**

**अन्वयः** - हे मुकुन्द! भवन्तं मूर्ध्ना प्रणिपत्य (अहम्) इयन्तम् एव एकान्तम् अर्थं याचे (यत्) भवत्प्रसादात् त्वच्चरणारविन्दे भवे भवे मे अविस्मृतिः अस्तु।

**सन्धिस्थलानि**-

मेऽस्तु-

अविस्मृतिस्त्वच्चरणारविन्दे

**११. कृष्ण त्वदीयपदपङ्कजपञ्जरान्तम्**
**अद्यैव मे विशतु मानसराजहंसः।**
**प्राणप्रयाणसमये कफवातपित्तैः**
**कण्ठावरोधनविधौ स्मरणं कुतस्ते॥**

**अन्वयः** - हे कृष्ण! मे मानसराजहंसः, अद्य एव त्वदीयपदपङ्कजपञ्जरान्तं विशतु, (यतः) प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ ते स्मरणं कुतः (भविष्यति)?

**मम अयम् - मदीयः, मामकीनः, मामकः**

**मम इयम् - मदीया, मामकीना, मामकी**

**मम इदम्- मदीयम्, मामकीनम्, मामकम्**

**तव अयम् - त्वदीयः, तावकीनः, तावकः**

**तव इयम् - त्वदीया, तावकीना, तावकी**

**तव इदम्- त्वदीयम्, तावकीनम्, तावकम्**

**१२. आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं**
**मेदश्छेदफलानि पूर्तविधयः सर्वे हुतं भस्मनि।**
**तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-**
**द्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः॥**

**मुकुन्दमालास्तोत्रम्, श्लो. २६**

**अन्वयः** - यत्पदद्वन्द्वाम्भोरुहसंस्मृतिं विना आम्नायाभ्यसनानि अरण्यरुदितम् (इव) भवन्ति, अन्वहं वेदव्रतानि मेदश्छेदफलानि (इव), सर्वे पूर्तविधयः भस्मनि हुतम् इव, तीर्थानाम् अवगाहनानि च गजस्नानम् इव भवति, सः श्रीमन्नारायणः देवः विजयते।

- **समासस्थलानि-**

अम्भसि रुह्यते इति = अम्भोरुहः

पदयोः द्वन्द्वः = पदद्वन्द्वः

पदद्वन्द्वश्चासौ अम्भोरुहः = पदद्वन्द्वाम्भोरुहः

पदद्वन्द्वाम्भोरुहस्य संस्मृतिः = पदद्वन्द्वाम्भोरुहसंस्मृतिः

यस्य पदद्वन्द्वाम्भोरुहसंस्मृतिः = यत्पदद्वन्द्वाम्भोरुहसंस्मृतिः, ताम्

अरण्ये रुदितम् = अरण्यरुदितम्

वेदस्य व्रतानि = वेदव्रतानि

मेदसः छेदः = मेदश्छेदः, मेदश्छेद एव फलं येषाम्, तानि = मेदश्छेदफलानि।

गजस्य स्नानम् = गजस्नानम्

- **सन्धिस्थलानि**-

आम्नायाभ्यसनानि + अरण्यरुदितम् = आम्नायाभ्यसनान्यरण्यरुदितम्।

वेदव्रतानि + अन्वहम् = वेदव्रतान्यन्वहम्।

सः + नारायणः = स नारायणः - अत्र विसर्गः न दृश्यते।

**१३. मज्जन्मनः फलमिदं मधुकैटभारे**
**मत्प्रार्थनीय मदनुग्रह एष एव।**
**त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य-**
**भृत्यस्य भृत्य इति मां स्मर लोकनाथ॥ मुकुन्दमालास्तोत्रम्,२८ ॥**

**अन्वयः** - हे मधुकैटभारे! मज्जन्मनः फलम्, मत्प्रार्थनीयः, तथा च भवतः

मदनुग्रहः (मयि अनुग्रहः) अपि एषः एव स्यात् यत् हे लोकनाथ त्वं मां त्वद्भृत्य-भृत्य-परिचारक-भृत्य-भृत्य-भृत्यस्य भृत्यः इति मां स्मर।

**१४. का ते कान्ता कस्ते पुत्रः**

**संसारोऽयमतीव विचित्रः।**

**कस्य त्वं वा कुत आयातः,**

**तत्त्वं चिन्तय तदिह भ्रातः॥ भज गोविन्दं स्तोत्रम्, ८**

**अन्वयः** - हे भ्रातः! अयं संसारः अतीव विचित्रः (अस्ति), (अत्र) का ते कान्ता? कः (वा) ते पुत्रः? (इति निश्चितं नास्ति), तस्मात् (त्वम्) तत् तत्त्वं चिन्तय यत् त्वं कस्य असि? तथा कुतः आयातः असि? इत्यादि।

**सन्धिस्थलानि** -

कः + ते = कस्ते - अत्र विसर्गस्य 'स्' इत्यादेशः।

संसारः + अयम् = संसारोऽयम्- अत्र रेफस्य 'उ' इत्यादेशः, ततः गुणः, ततश्च पूर्वरूपसन्धिः।

**१५. मा कुरु धनजनयौवनगर्वं**

**हरति निमेषात्कालः सर्वम्।**

**मायामयमिदमखिलं हित्वा**

**ब्रह्मपदं त्वं प्रविश विदित्वा॥ भज गोविन्दं स्तोत्रम्, ११॥**

**अन्वयः** - हे मनुष्य! धनजनयौवनगर्वं मा कुरु, (यतः) कालः निमेषात् सर्वं हरति। (अतः) इदम् अखिलं मायामयं विदित्वा, हित्वा च त्वं ब्रह्मपदं प्रविश।

**समासस्थलानि**-

धनञ्च जनश्च यौवनञ्च - धनजनयौवनानि - द्वन्द्वसमासः

धनजनयौवनानां गर्वः = धनजनयौवनगर्वः, तम् - षष्ठीतत्पुरुषसमासः

ब्रह्मणः पदम् = ब्रह्मपदम् - षष्ठीतत्पुरुषसमासः।

**सन्धिस्थलानि**-

विशिष्टः सन्धिः नास्ति, केवलम् अनुस्वारसन्धिरेव।